लिङ्गस्य दर्शनं पुण्यं दर्शनात् स्पर्शनं वरम् ॥ २८ ॥
अर्चनादधिकं नास्ति ब्रह्मपुत्र ! न संशयः ।
एवं सङ्क्षेपतः प्रोक्तमघोरार्चनमुत्तमम् ॥ २९ ॥
वर्षकोटिशतेनापि विस्तरेण न शक्यते ॥ ३० ॥

इत्यादि महापुराणे श्रीलैङ्गे उत्तरार्द्धे षड्विंशतितमोऽध्यायः ॥ २६ ॥

---

## सप्तविंशतितमोऽध्यायः ।



ऋषय ऊचुः ।

प्रभावो नन्दिनश्चैव लिङ्गपूजाफलं श्रुतम् ।
श्रुतिभिः सम्मितं सर्वं रोमहर्षण सुव्रत ! ॥ १ ॥
जयाभिषेकमीशेन कथितं मनवे पुरा ।
हिताय मेरुशिखरे क्षत्रियाणां त्रिशूलिना ॥ २ ॥
तत् कथं षोड़शविधं महादानञ्च शोभनम् ।
वक्तुमर्हसि चास्माकं सूत ! बुद्धिमतां वर ! ॥ ३ ॥

सूत उवाच ।

श्रीवत्साङ्कं पुरा कृत्वा मनुः स्वायम्भुवः प्रभुः ।
मेरुमासाद्य देवेशमस्तुवन्नीललोहितम् ॥ ४ ॥
तपसा च विनीताय प्रहृष्टः प्रददौ भवः ।

दिव्यं दृष्ट्वा नमोशानस्तेनापश्यत्तमव्ययम् ॥ ५ ॥
नत्वा सम्पूज्य विधिना कृताञ्जलिपुटः स्थितः।
हर्षगद्गदया वाचा प्रोवाच च ननाम च ॥ ६ ॥
देवदेव! जगन्नाथ! नमस्ते भुवनेश्वर!।
जीवच्छ्राद्धं महादेवप्रसादेन विनिर्मितम् ॥ ७ ॥
पूजितश्च ततो देवो दृष्टश्चैव मयाधुना।
शक्राय कथितं पूर्वं धर्मकामार्थमोक्षदम् ॥ ८ ॥
जयाभिषेकं देवेश! वक्तुमर्हसि मे प्रभो!।

सूत उवाच।

तस्मै देवो महादेवो भगवान्नीललोहितः ॥ ९ ॥
जयाभिषेकमखिलमवदत् परमेश्वरः।

श्रीभगवानुवाच।

जयाभिषेकं वक्ष्यामि नृपाणां हितकाम्यया ॥ १० ॥
अपमृत्युजयार्थञ्च सर्वशत्रुजयाय च।
युद्धकाले तु सम्प्राप्ते कृत्वैवमभिषेचनम् ॥ ११ ॥
स्नपतिश्चाभिषिच्यैव गच्छेद्योद्धुं रणाजिरे
विधिना मण्डपं कृत्वा प्रपां वा कूटमेव वा ॥ १२ ॥
नवधा स्थापयेदह्निं ब्राह्मणो वेदपारगः।
ततः सर्वाभिषेकार्थं सूत्रपातञ्च कारयेत् ॥ १३ ॥
प्रागाद्यं वर्णसूत्रञ्च दक्षिणाद्यं तथा पुनः।
सहस्राणां द्वयन्तत्र शतानाञ्च चतुष्टयम् ॥ १४ ॥
शेषमेव शुभं कोष्ठं तेषु कोष्ठन्तु संहरेत्।
बाह्ये वीथ्यां पदञ्चैकं समन्तादुपसंहरेत् ॥ १५ ॥
अङ्गसूत्राणि संगृह्य विधिना पूर्वमेव तु।

प्रागाद्यं वर्णसूत्रञ्च दक्षिणाद्यं तथा पुनः ॥ १६ ॥
प्रागाद्यं दक्षिणाद्यञ्च षट्त्रिंशत् संहरेत् क्रमात् ।
प्रागाद्याः पंक्तयः सप्त दक्षिणाद्यास्तथा पुनः ॥ १७॥
तस्मादेकोनपञ्चाशत् पंक्तयः परिकीर्त्तिताः ।
नवपंक्तौर्हरेन्मध्ये गन्धगोमयवारिणा ॥ १८ ॥
कमलञ्चालिखेत्तत्र हस्तमात्रेण शोभनम् ।
अष्टपत्रं सितं वृत्तं कर्णिका केसरान्वितम् ॥ १९ ॥
अष्टाङ्गुलप्रमाणेन कर्णिका हेमसन्निभा ।
चतुरङ्गुलमानेन केसरस्थानमुच्यते ॥ २० ॥
धर्मो ज्ञानञ्च वैराग्यमैश्वर्य्यञ्च यथाक्रमम् ।
आग्नेयादिषु कोणेषु स्थापयेत् प्रणवेन तु ॥ २१ ॥
अव्यक्तादीनि वै दिक्षु गात्राकारेण वै न्यसेत् ।
अव्यक्तं नियतः कालः कालो चेति चतुष्टयम् ॥ २२ ॥
सितरक्तहिरण्याभ कृष्णा धर्मादयः क्रमात् ।
हंसाकारेण वै गात्रं हेमाभासेन सुव्रताः ! ॥२३ ॥
आधारशक्तिमध्ये तु कमलं सृष्टिकारणम् ।
विन्दुमात्रं कलामध्ये नादाकारमतः परम् ॥ २४ ॥
नादोपरि शिवं ध्यायेदोङ्काराख्यं जगद्गुरुम् ।
मनोन्मनीञ्च पद्माभं महादेवञ्च भावयेत् ॥ २५ ॥
वामादयः क्रमेणैव प्रागाद्याः केसरेषु वै ।
वामा ज्येष्ठा तथा रौद्री काली विकरणी तथा ॥२
बला प्रमथिनी देवी दमनी च यथाक्रमम् ।
वामदेवादिभिः सार्द्धं प्रणवेनैव विन्यसेत् ॥ २७ ॥
नमोऽस्तु वामदेवाय नमो ज्येष्ठाय शूलिने ॥ २८ ॥

रुद्राय कालरूपाय कलविकरणाय च।
बलाय च तथा सर्वभूतस्य दमनाय च॥ २९॥
मनोन्मनाय देवाय मनोन्मन्यै नमो नमः॥
मन्त्रैरेतैर्यथा न्यायं पूजयेत् परिमण्डलम्॥ ३०॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु।
द्वितीयावरणे चैव शक्तयः षोड़शैव तु॥ ३१॥
तृतीयावरणे चैव चतुर्विंशदनुक्रमात्।
पिशाचवीथिर्वै मध्ये शाभिवीथिः समन्ततः॥ ३२॥
मन्त्रैरेतैर्यथा न्यायं पिशाचानां प्रकीर्त्तिता।
अष्टोत्तरसहस्रन्तु पदमष्टारसंयुतम्॥ ३३॥
तेषु तेषु पृथक्तेन पदेषु कमलं क्रमात्।
कल्पयेत् शालिनीवारगोधूमैश्च यवादिभिः॥ ३४॥
तण्डुलैश्च तिलैर्वाथ गौरसर्षपसंयुतैः।
अथवा कल्पयेदेतैर्यथाकालं विधानतः॥ ३५॥
अष्टपत्रं लिखेत्तेषु कर्णिकाकेसरान्वितम्।
शालीनामाढ़कं प्रोक्तं कमलानां पृथक् पृथक्॥ ३६॥
तण्डुलानां तदर्द्धं स्यात्तदर्धञ्च यवादयः।
द्रोणं प्रधानकुम्भस्य तदर्द्धं तण्डुलाः स्मृताः॥ ३७॥
तिलानामाढ़कं मध्ये यवानाञ्च तदर्धकम्।
अथाम्भसा समभ्युक्ष्य कमलं प्रणवेन तु॥ ३८॥
तेषु सर्वेषु विधिना प्रणवं विन्यसेत् क्रमात्।
एवं समाप्य चाभ्युक्ष्य पदसाहस्रमुत्तमम्॥ ३९॥
कलशानां सहस्राणि हैमानि च शुभानि च।
उक्तलक्षणयुक्तानि कारयेद्राजतानि वा॥ ४०॥

ताम्रजानि यथा न्याय प्रणवेनार्घ्यवारिणा ।
द्वादशाङ्गुलविस्तारमुदरे समुदाहृतम् । ४१ ।
वर्त्ति तन्तु तदर्धेन नाभिस्तस्य विधीयते ।
कण्ठन्तु द्व्यङ्गुलोत्सेधं विस्तारश्चतुरङ्गुलम् ॥४२॥
ओष्ठस्य द्व्यङ्गुलोत्सेधं निर्गमं द्व्यङ्गुलं स्मृतम् ।
तस्माद्वै द्विगुणं दिव्यं शिवकुम्भं प्रकीर्त्तितम् ॥ ४३ ॥
यवमात्रान्तरं सम्यक् तन्तुना वेष्टयेद्धि वै ।
अवगुण्ठ्य तथाभ्युक्ष्य कुशोपरि यथाविधि ॥ ४४ ॥
पूर्ववत् प्रणवेनैव पूरयेद् गन्धवारिणा ।
स्थापयेत् शिवकुम्भाख्यं वर्धनीञ्च विधानतः ॥ ४५ ॥
मध्यपद्मस्य मध्ये तु सकूर्चं साक्षतं क्रमात् ।
आवेष्ट्य वस्त्रयुग्मेन प्रच्छाद्य कमलेन तु ॥ ४६ ॥
हैमेन चित्ररत्नेन सहस्रकलशं पृथक् ।
शिवकुम्भे शिवं स्थाप्य गायत्र्या प्रणवेन च ॥ ४७ ॥
विद्महे पुरुषायैव महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥ ४८ ॥
मन्त्रेणानेन रुद्रस्य सान्निध्यं सर्वदा स्मृतम् ।
वर्धन्यां देवि गायत्र्या देवीं संस्थाप्य पूजयेत् ॥४९॥
गणाम्बिकायै विद्महे महातपायै धीमहि ।
तन्नो गौरी प्रचोदयात् ॥ ५० ॥
प्रथमावरणे चैव वामाद्याः परिकीर्त्तिताः ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ५१ ॥
शक्तयः षोडशैवात्र पूर्वाद्यन्तेषु सुव्रत ! ।
एन्द्रव्यूहस्य मध्ये तु सुभद्रां स्थाप्य पूजयेत् ॥ ५२ ॥

भद्रामाग्नेय चक्रे तु याम्ये तु भद्रकालिकाम् ।
अम्बिकां नैर्ऋते व्यूहे मध्यकुम्भे तु पूजयेत् ॥ ५३ ॥
श्रीदेवीं वारुणे भागे वागीशां वायुगोचरे ।
गोमुखीं सौम्यभागे तु मध्यकुम्भे तु पूजयेत् ॥ ५४ ॥
रुद्रव्यूहस्य मध्ये तु भद्रकर्णां समर्चयेत् ।
ऐन्द्राग्निविदिशोर्मध्ये पूजयेदणिमां शुभाम् ॥ ५५ ॥
याम्यपावकयोर्मध्ये लघिमां कमले न्यसेत् ।
राक्षसान्तकयोर्मध्ये महिमां मध्यतो यजेत् ॥ ५६ ॥
वरुणासुरयोर्मध्ये प्राप्तिं वै मध्यतो यजेत् ।
वरुणानिलयोर्मध्ये प्राकाम्यं कमले न्यसेत् ॥ ५७ ॥
वित्तेशानिलयोर्मध्ये ईशित्वं स्थाप्य पूजयेत् ।
वित्तेशेशानयोर्मध्ये वशित्वं स्थाप्य पूजयेत् ॥ ५८ ॥
ऐन्द्रे शेशानयोर्मध्ये यजेत् कामावसायकम् ।
द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु ॥ ५९ ॥
शक्तयस्तु चतुर्विंशत् प्रधानकमलेषु च ।
पूजयेद् व्यूहमध्ये तु पूर्ववद्विधिपूर्वकम् ॥ ६० ॥
दीप्तां दीप्तायिकाञ्चैव चण्डां चण्डांशुनायिकाम् ।
सुमतीं सुमत्यायीञ्च गोपां गोपायिकां तथा ॥ ६१ ॥
अथ नन्दञ्च नन्दायीं पितामहमतः परम् ।
पितामहायीं पूर्वाद्यं विधिना स्थाप्य पूजयेत् ॥ ६२
एवं सम्पूज्य विधिना तृतीयावरणं शुभम् ।
सौभद्रं व्यूहमासाद्य प्रथमावरणे क्रमात् ॥ ६३ ॥
प्रागाद्यं स्थाप्य विधिना शक्त्यष्टकमनुक्रमात् ।
द्वितीयावरणे चैव प्रागाद्यं शृणु शक्तयः ॥ ६४ ॥

षोडशैव तु चाभ्यर्च्य पश्चमुद्रास्तु दर्शयेत् ।
बिन्दुका बिन्दुगर्भा च नादिनी नादगर्भजा ॥ ६५ ॥
शक्तिका शक्तिगर्भा च परा चैव परापरा ।
प्रथमावरणेऽष्टौ च शक्तयः परिकीर्त्तिताः ॥ ६६ ॥
चण्डा चण्डमुखी चैव चण्डवेगा मनोजवा ।
चण्डाक्षी चण्डनिर्घोषा भृकुटी चण्डनायिका ॥ ६७ ॥
मनोत्सेधा मनोध्यक्षा मानसी माननायिका ।
मनोहरी मनोह्लादी मनः प्रीतिर्महेश्वरी ॥ ६८ ॥
द्वितीयावरणे चैव षोड़शैव प्रकीर्त्तिताः ।
सौभद्रं कथितं व्यूहं भद्रं व्यूहं शृणुष्व मे ॥ ६९ ॥
ऐन्द्री हौताशनी याम्या नैरृती वारुणी तथा ।
वायव्या चैव कौवेरी ऐशानी चाष्टशक्तयः ॥ ७० ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
हरिणी च सुवर्णा च काञ्चनी हाटकी तथा ॥ ७१ ॥
रुक्मिणी सत्यभामा च सुभगा जम्बुनायिका ।
वाग्भवा वाक्पथा वाणी भीमा चित्ररथा सुधीः ॥ ७२
वेदमाता हिरण्याक्षी द्वितीयावरणे स्मृताः ।
भद्राख्यं कथितं व्यूहं कनकाख्यं शृणुष्व मे ॥ ७३ ॥
वज्रं शक्तिञ्च दण्डञ्च खड्गम्पाशं ध्वजं तथा ।
गदां त्रिशूलं क्रमशः प्रथमावरणे स्मृताः ॥ ७४ ॥
बुद्धा प्रबुद्धा चण्डा च मुण्डा चैव कपालिनी ।
मृत्युहन्त्री विरूपाक्षी कपर्दी कमलासना ॥ ७५ ॥
दंष्ट्रिणी रङ्गिणी चैव लम्बाक्षी कङ्कभूषणी ।
सम्भावा भाविनी चैव षड़शैव प्रकीर्त्तिताः ॥ ७६ ॥

कथितं कनकव्यूहमम्बिकाख्यं शृणुष्व मे।
खेचरी चात्मनासा च भवानी वह्निरूपिणी॥ ७७॥
वह्निनी वह्निनाभा च महिमा मृतलालसा।
प्रथमावरणे चाष्टौ शक्तयः सर्वसम्मताः॥ ७८॥
क्षमा च शिखरा देवी ऋतुरत्नाशिला तथा।
छाया भूतपनी धन्या इन्द्रमाता च वैष्णवी॥ ७९॥
तृष्णा रागवती मोहा कामकोपा महोत्कटा।
इन्द्रा च वधिरा देवी षोडशैताः प्रकीर्त्तिताः॥ ८०॥
कथितं चाम्बिकाव्यूहं श्रीव्यूहं शृणु सुव्रत!।
स्पर्शास्पर्शवती गन्धा प्राणापाना समानका॥ ८१॥
उदाना व्याननामा च प्रथमावरणे स्मृताः।
तमोहता प्रभा मोघा तेजनी दहनी तथा॥ ८२॥
भीमास्या जालनी चोषा शोषणी रुद्रनायिका।
वीरभद्रा गणाध्यक्षा चन्द्रहासा च गह्वरा॥ ८३॥
गणमाताम्बिका चैव शक्तयः सर्वसम्मताः।
द्वितीयावरणे प्रोक्ताः षोडशैव यथाक्रमात्॥ ८४॥
श्रीव्यूहं कथितं भद्रं वागीशं शृणु सुव्रत!।
धारा वारिधरा चैव वह्निणी नाशकी तथा॥ ८५॥
मर्त्यातीता महामात्रा वज्रिणी कामधेनुका।
प्रथमावरणेऽप्येवं शक्तयोऽष्टौ प्रकीर्त्तिताः॥ ८६॥
पयोष्णी वारुणी शान्ता जयन्ती च वरप्रदा।
प्लावनी जलमाता च पयोमाता महाम्बिका॥ ८७॥
रक्ता कराली चण्डाक्षी महोच्छुष्मा पयस्विनी।
मयाविद्येश्वरी काली कालिका च यथाक्रमम्॥ ८८॥
षोड़शैव समाख्याताः शक्तयः सर्वसम्मताः।

व्यूहं वागीश्वरं प्रोक्तं गोमुखं व्यूहमुच्यते । ८९ ॥
शङ्खिनी हलिनी चैव लङ्कावर्णा च कल्किनी ।
यक्षिणी मालिनी चैव वमनी च रसात्मनी ॥ ९० ॥
प्रथमावरणे चैव शक्तयोऽष्टौ प्रकीर्त्तिताः ।
चण्डा घण्टा महानादा सुमुखी दुर्मुखी बला ॥ ९१ ॥
रेवती प्रथमा घोरा सैन्या लीना महाबला ।
जया च विजया चैव अपरा चापरा जिता ॥ ९२ ॥
द्वितीयावरणे चैव शक्तयः षोड़शैव तु ।
कथितं गोमुखी व्यूहं भद्रकर्णीं शृणुष्व मे॥९३॥
महाजया विरूपाक्षी शुक्लाभा काशमातृका ।
संहारी जातहारी च दंष्ट्राली शुष्करेवती ॥ ९४ ॥
प्रथमावरणे चाष्टौ शक्तयः परिकीर्त्तिताः ।
पिपीलिका पुष्पहारी अशनी सर्वहारिणी ॥ ९५ ॥
भद्रहा विश्वहारी च हिमा योगेश्वरी तथा ।
छिद्रा भानुमती छिद्रा सैंहिकी सुरभीसमा ॥ ९६ ॥
सर्वभव्या च वेगाख्या शक्तयः षोड़शैव तु ।
महाव्यूहाष्टकं प्रोक्तमुपव्यूहाष्टकं शृणु ॥ ९७ ॥
अणिमा व्यूहमावेश्य प्रथमावरणे क्रमात् ।
ऐन्द्रा तु चित्रभानुश्च वारुणी दण्डिरेव च ॥९८ ॥
प्राणरूपी तथा हंसः स्वात्मशक्तिः पितामहः ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ९९ ॥
केशवो भगवान् रुद्रश्चन्द्रमा भास्करस्तथा ।
महात्मा च तथा ह्यात्मा ह्यन्तरात्मा महेश्वरः ॥ १००॥
परमात्मा ह्यणुर्जीवः पिङ्गलः पुरुषः पशुः ।

भोक्ता भूतपतिर्भीमो द्वितीयावरणे स्मृताः ॥ १०१ ॥
कथितस्त्वाणिमाव्यूहं लघिमाख्यं वदामि ते ।
श्रीकण्ठोऽनन्तश्च सूक्ष्मश्च त्रिमूर्त्तिः शशकस्तथा ॥१०२॥
अमरेशः स्थितीशश्च दारैतश्च तथाष्टमः ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १०३ ॥
स्थाणुर्हरश्च दण्डेशो भौक्तीशः सुरपुङ्गवः ।
सद्यो जातोऽनुग्रहेशः क्रूरसेनः सुरेश्वरः ॥ १०४ ॥
क्रोधीशश्च तथा चण्डः प्रचण्डः शिव एव च ।
एकरुद्रस्तथा कूर्मश्चैकनेत्रश्चतुर्मुखः ॥ १०५ ॥
द्वितीयावरणे रुद्राः षोड़शैव प्रकीर्त्तिताः ।
कथितं लघिमा व्यूहं महिमां शृणु सुव्रत ! ॥ १०६ ॥
अजेशः क्षेमरुद्रश्च सोमोऽथो लाङ्गली तथा ।
दण्डारुश्चार्धनारी च एकान्तश्चान्त एव च ॥ १०७ ॥
पाली भुजङ्गनामा च पिनाकी खड्गिरेव च ।
काम ईशस्तथा श्वेतो भृगुः षोड़श वै स्मृताः ॥१०८॥
कथितं महिमा व्यूहं प्राप्तिव्यूहं शृणुष्व मे ।
संवर्त्तो लकुलीशश्च वाड़वो हस्तिरेव च ॥ १०९ ॥
चण्डयक्षो गणपतिर्महात्मा भृगुजोऽष्टमः ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ११० ॥
त्रिविक्रमो महाजिह्वो ऋक्षः श्रीभद्र एव च ।
महादेवो दधीचश्च कुमारश्च परा वरः ॥ १११ ॥
महादंष्ट्रः करालश्च सुचकश्च सुवर्द्धनः ।
महाध्माङ्क्षो महानन्दो दण्डी गोपालकस्तथा ॥११२॥
प्राप्तिव्यूहं समाख्यातं प्राकाम्यं शृणु सुव्रत ! ।

पुष्पदन्तो महानागो विपुलानन्दकारकः ॥ १३ ॥
शुक्लो विशालः कमलो बिल्वशाकण एव च ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ १४ ॥
रतिप्रियः सुरेशानश्चिनाङ्गश्च सदुर्जयः ।
विनायकः क्षेत्रपालो महामोहश्च जङ्गलः ॥ १५ ॥
वत्सपुत्रो महापुत्रो ग्रामदेशाधिपस्तथा ।
सर्वावस्थाधिपो देवो मेघनादः प्रचण्डकः ॥ १६ ॥
कालदूतश्च कथितो द्वितीयावरणं स्मृतम् ।
प्राकाम्यं कथितं व्यूहमैश्वर्य्यं कथयामि ते ॥ १७ ॥
मङ्गला चर्चिका चैव योगेशा हरदायिका ।
भासुरा सुरमाता च सुन्दरी मातृकाष्टमी ॥ १८ ॥
प्रथमावरणे प्रोक्ता द्वितीयावरणे शृणु ।
गणाधिपश्च मन्त्रज्ञो वरदेवः षडाननः ॥ १९ ॥
विदग्धश्च विचित्रश्च अमोघो मोघ एव च ।
अश्वो रुद्रश्च सोमेशश्चोत्तमोदुम्बरस्तथा ॥ २० ॥
नारसिंहश्च विजयस्तथा इन्द्रगुहः प्रभुः ।
अपां पतिश्च विधिना द्वितीयावरणं स्मृतम् ॥ २१ ॥
ऐश्वर्य्यं कथितं व्यूहं वशित्वं पुनरुच्यते ।
गगनो भवनश्चैव विजयो ह्यजयस्तथा ॥ २२ ॥
महाजयस्तथाङ्गारो व्यङ्गारश्च महायशाः ।
प्रथमावरणे प्रोक्ता द्वितीयावरणे शृणु ॥ २३ ॥
सुन्दरश्च प्रचण्डेशो महावर्णो महासुरः ।
महारोमा महागर्भः प्रथमः कनकस्तथा ॥ २४ ॥
खरजो गरुडश्चैव मेघनादोऽथ गर्जकः ।

गजश्च छेदको बाहुस्त्रिशिखो मारिरेव च ॥ २५ ॥
वशित्वं कथितं व्यूहं शृणु कामावसायिकम्।
विनादो विकटश्चैव वसन्तो भय एव च ॥ २६ ॥
विद्युन्महाबलश्चैव कमलो दमनस्तथा।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ २७ ॥
धर्मयातिबलः सर्पो महाकायो महाहनुः।
सबलश्चैव भस्माङ्गी दुर्जयो दुरतिक्रमः ॥ २८ ॥
वेतालो रौरवश्चैव दुर्द्धरो भोग एव च।
वज्रकालाग्निरुद्रश्च सद्यो नादो महागुहः ॥ २९ ॥
द्वितीयावरणं प्रोक्तं व्यूहञ्चैवावसायिकम्।
कथितं षोड़शव्यूहं द्वितीयावरणं शृणु ॥ ३० ॥
द्वितीयावरणे चैव दशव्यूहे च शक्तयः।
प्रथमावरणे चाष्टौ बाह्ये षोड़श एव च ॥ ३१ ॥
मनोहरा महानादा चित्रा चित्ररथा तथा।
रोहिणी चैव चित्राङ्गी चित्ररेखा विचित्रिका ॥ ३२ ॥
प्रथमावरणे प्रोक्ता द्वितीयावरणं शृणु।
चित्रा विचित्ररूपा च शुभदा कामदा शुभा ॥ ३३ ॥
क्रूरा च पिङ्गला देवी खड्गिका लम्बिका सती।
दंष्ट्राली राक्षसी ध्वंसी लोलुपा लोहिता मुखी ॥ ३४
द्वितीयावरणे प्रोक्ताः षोड़शैव समासतः।
दशव्यूहं समाख्यातं दाशव्यूहं शृणुष्व मे ॥ ३५ ॥
सर्वा सती विश्वरूपा लम्पटा चामिषप्रिया।
दीर्घदंष्ट्रा च वज्रा च लम्बोष्ठी प्राणहारिणी ॥ ३६ ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु।

गजकर्णाश्वकर्णी च महाकाली सुभीषणा ॥ ३७ ॥
वातवेगरवा घोरा घनाघनरवा तथा ।
वरघोषा महावर्णा सुघण्टा घण्टिका तथा ॥ ३८ ॥
घण्टेश्वरी महाघोरा घोरा चैवातिघोरिका ।
द्वितीयावरणे चैव षोड़शैव प्रकीर्त्तिताः ॥ ३९ ॥
द्राव्यूहं समाख्यातं चण्डव्यूहं शृणुष्व मे ।
अतिघण्टा चातिघोरा कराला करभा तथा ॥ ४० ॥
विभूतिर्भोगदा कान्तिः शङ्खिनी चाष्टमी स्मृता ।
प्रथमावरणे प्रोक्ता द्वितीयावरणे शृणु ॥ ४१ ॥
पत्रिणी चैव गान्धारी योगमाता सुपीवरा ।
रक्ता मालांशुका वीरा संहारी मांसहारिणी ॥ ४२ ॥
फलहारी जीवहारी स्वेच्छाहारी च तुण्डिका ।
रेवती रङ्गिणी सङ्गा द्वितीये षोड़शैव तु ॥ ४३ ॥
चण्डव्यूहं समाख्यातं चण्डाव्यूहमथोच्यते ।
चण्डी चण्डमुखी चण्डा चण्डवेगा महारवा ॥ ४४ ॥
भ्रुकुटी चण्डभूश्चैव चण्डरूपाष्टमी स्मृता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ४५ ॥
चण्डप्राणा बला चैव बलजिह्वा बलेश्वरी ।
बलवेगा महाकाया महाकोपा च विद्युता ॥ ४६ ॥
कङ्काली कलशी चैव विद्युता चण्डघोषिका ।
महाघोषा महारावा चण्डभाऽनङ्गचण्डिका ॥ ४७ ॥
चण्डायाः कथितं व्यूहं हरव्यूहं शृणुष्व मे ।
चण्डाक्षी कामदा देवी सुकरा कुक्कुटानना ॥ ४८ ॥
गान्धारी दुन्दुभी दुर्गा सौमित्रा चाष्टमी स्मृता ।

प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ४९ ॥
मतोद्भवा महासत्त्वोर्वरदा जीवरक्षिणी ।
हरिणी शीघ्रजीवा च दण्डवक्त्रा चतुर्भुजा ॥ ५० ॥
व्योमचारी व्योमरूपा व्योमव्यापी शुभोदया ।
गृहचारी सुचारी च विषाहारी विषार्त्तिहा ॥५१॥
हरव्यूहं समाख्यातं हरायां व्यूहमुच्यते ।
जम्भाच्युता च कङ्कारी देविका दुर्द्धरा वहा ॥ ५२ ॥
चण्डिका चपला चेति प्रथमावरणे स्मृताः ।
चण्डिका चामरी चैव भण्डिका च शुभानना ।५३॥
पिण्डिका मुण्डिनी मुण्डा शाकिनी शाङ्करी तथा ।
कर्त्तरी भर्त्तरी चैव भागिनी यज्ञदायिनी ॥ ५४ ॥
यमदंष्ट्रा महादंष्ट्रा कराला चेति शक्तयः ।
हरायाः कथितं व्यूहं शौण्डव्यूहं शृणुष्व मे ॥५५॥
विकराली कराली च कालजङ्घा यशस्विनी ।
वेगा वेगवती यज्ञा वेदाङ्गा वारुणी स्मृता ॥ ५६ ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
वन्ध्या शङ्कातिशङ्का वा बला चैवाबला तथा ॥५७॥
अञ्जनी मोहनी माया विकटाङ्गी नली तथा ।
गण्डकी दण्डकी घोणा शोणा सत्यवती तथा ।
कल्लोला चेति क्रमशः षोडशैव यथाविधि ।
शौण्डव्यूहं समाख्यातं शौण्डाया व्यूहमुच्यते ॥ ५८।
दन्तुरा रौद्रभागा च अमृता सकुला शुभा ।
चलजिह्वार्य्यनेत्रा च रूपिणी दारिका तथा ।६०॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।

खादका रूपनामा च संहारी च चमात्मका ॥६१॥
कण्डिनी पेषिणी चैव महात्रासा कृताङ्किका।
दण्डिनी किङ्करी बिम्बा वर्णिनो चामलाङ्गिनी॥६२॥
द्रविणी द्राविणी चैव शक्तयः षोड़शैव तु।
कथितं हि मनोरम्यं शौण्डाया व्यूहमुत्तमम् ॥६३॥
प्रथमाख्यं प्रवक्ष्यामि व्यूहं परमशोभनम्।
प्लवनी ल्लावनी शोभा मन्दा चैव मदोत्कटा॥ ६४॥
मन्दाऽक्षेपा महादेवी प्रथमावरणे स्मृताः।
कामसन्दीपनी देवी अतिरूपा मनोहरा॥ ६५॥
महावशा मदग्राहा विह्वला मदविह्वला।
अरुणा शोषणा दिव्या रेवती भाण्डनायिका॥६६॥
स्तम्भिनी घोररक्ताक्षी स्मररूपा सुघोषणा।
व्यूहं प्रथममाख्यातं स्वायम्भुव ! यथा तथा॥ ६७
कथितं प्रथमा व्यूहं प्रवक्ष्यामि शृणुष्व मे।
घोरा घोरतरा घोरा अतिघोरा घनायिका॥ ६८।
धावनी क्रोष्टुका मुण्डा चाष्टमी परिकीर्त्तिता।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु॥ ६८॥
भीमा भीमतरा भीमा शस्ता चैव सुवर्त्तुला।
स्तम्भिनी रोदिनी रौद्रा रुद्रवत्य चलाचला॥ ७०
महाबला महाशान्तिः शाला शान्ता शिवाशिवा
बृहत्कक्षा महानासा षोड़शैव प्रकीर्त्तिताः॥ ७१
प्रथमायाः समाख्यातं मन्मथ व्यूहमुच्यते।
तालकर्णी च बाला च कल्याणी कपिला शिवा॥
इष्टिस्तुष्टिः प्रतिज्ञा च प्रथमावरणे स्मृताः।

ख्यातिः पुष्टिकरी तुष्टिर्जला चैव श्रुतिर्धृतिः ॥ ७३ ॥
कामदा शुभदा सौम्या तेजनी कामतन्त्रिका ।
धर्माधर्मवशा शीला पापहा धर्मवर्द्धिनी ॥ ७४ ॥
मन्मथं कथितं व्यूहं मन्मथायाः शृणुष्व मे ।
धर्मरक्षा विधाना च धर्माधर्मवती तथा ॥ ७५ ॥
सुमतिर्दुर्मतिर्मेधा विमला चाष्टमी स्मृता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ७६ ॥
शुद्धिर्बुद्धिर्धृतिः कान्तिर्वर्त्तुला मोहवर्धनी ।
बला चातिबला भीमा प्राणवृद्धिकरी तथा ॥ ७७ ॥
निर्लज्जा निर्घृणा मन्दा सर्वपापक्षयङ्करी ।
कपिला चातिविधुरा षोड़शैताः प्रकीर्त्तिताः ॥७८॥
मन्मथायिकमुक्तं ते भीमव्यूहं वदामि ते ।
रक्ता चैव विरक्ता च उद्वेगा शोकवर्द्धिनी ॥ ७९ ॥
कामात्तृष्णा क्षुधा मोहा चाष्टमी परिकीर्त्तिता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ८०॥
जया निद्रा भयालस्या जलतृष्णोदरीदरा ।
कृष्णा कृष्णाङ्गिनी वृद्धा शुद्धोच्छिष्टाशनी वृषा ॥८१॥
कामना शोभनी दग्धा दुःखदा सुखदा बली ।
भीमव्यूहं समाख्यातं भीमार्यो व्यूहमुच्यते ॥ ८२ ॥
आनन्दा च सुनन्दा च महानन्दा शुभङ्करी ।
वीतरागा महोत्साहा जितरागा मनोरथा ॥ ८३ ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
मनोन्मनी मनक्षोभा मदोन्मत्ता मदाकुला ॥ ८४ ॥
मन्दगर्भा महाभासा कामानन्दा सुविह्वला ।

महावेगा सुवेगा च महाभोगा भयावहा ॥ ८५ ॥
क्रमणी क्रामणी वक्रा द्वितीयावरणे स्मृताः ।
कथितं तव भीमाख्यं व्यूहं परमशोभनम् ॥ ८६ ॥
शाकुनं कथयाम्यद्य स्वायम्भुव ! मनोत्सुकम् ।
योगावेगा सुवेगा च अतिवेगा सुवासिनी ॥ ८७ ॥
देवी मनोरथा वेगा जलावर्त्ता च धीमती ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ८८ ॥
रोधनी क्षोभनी बाला विप्रा शेषा सुशोषणी ।
विद्युताभासिनी देवी मनोवेगा च चापला ॥ ८९ ॥
विद्युज्जिह्वा महाजिह्वा भ्रुकुटी कुटिलानना ।
पुष्पज्वाला महाज्वाला सुज्वाला च क्षयान्तिका ॥ ९० ॥
शाकुनं कथितं व्यूहं शाकुनायाः शृणुष्व मे ।
ज्वालिनी चैव भस्माङ्गी तथा भस्मान्तगा तता ॥ ९१ ॥
भाविनी च प्रजा विद्या ख्यातिश्चैवाष्टमी स्मृता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ ९२ ॥
उल्लेखा च पताका च भोगा भोगवती खगा ।
भोगभोगव्रता योगा भोगाख्या योगपारगा ॥ ९३ ॥
ऋद्धिर्बुद्धिर्धृतिः कान्तिः स्मृतिः साक्षात् श्रुतिर्धरा ।
शाकुनाया महाव्यूहं कथितं कामदायकम् ॥ ९४ ॥
स्वायम्भुव ! शृणु व्यूहं सुमत्याख्यं सुशोभनम् ।
परेष्टा च परा दृष्टा ह्यमृता फलनाशिनी ॥ ९५ ॥
हिरण्याक्षी सुवर्णाक्षी देवी साक्षात् कपिञ्जला ।
कामरेखा च कथितं प्रथमावरणं शृणु ॥ ९६ ॥
रत्नद्वीपा च सुद्वीपा रत्नदा रत्नमालिनी ।

रत्नशोभा सुशोभा च महाशोभा महाद्युतिः ॥ १९७ ॥
शाम्बरी बन्धुरा ग्रन्थिः पादकर्णा करानना।
हयग्रीवा च जिह्वा च सर्वभासेति शक्तयः ॥ १९८ ॥
कथितं सुमति व्यूहं सुमत्या व्यूहमुच्यते।
सर्वाशी च महाभक्षा महादंष्ट्रातिरौरवा ॥ १९९ ॥
विस्फुलिङ्गा विलिङ्गा च कृतान्ता भास्करानना।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ २०० ॥
रागारङ्गवती श्रेष्ठा महाक्रोधा च रौरवा।
क्रोधनी वसनी चैव कलहा च महाबला ॥ २०१ ॥
कलन्तिका चतुर्भेदा दुर्गा वै दुर्गपालिनी।
नाली सुनाली सौम्या च इत्येवं कथितं मया ॥२०२॥
गोपव्यूहं वदाम्यत्र शृणु स्वायम्भुवाखिलम्।
पाटली पाटवी चैव पाटी विटिपिटा तथा ॥ २०३ ॥
कङ्कटा सुपटा चैव प्रघटा च घटोद्भवा।
प्रथमावरणञ्चात्र भाषया कथितं मया ॥ २०४ ॥
नादाख्यी नादरूपा च सर्वकारी गमाऽगमा।
अनुचारी सुचारी च चण्डनाडी सुवाहिनी ॥ २०५ ॥
सुयोगा च वियोगा च हंसाख्या च विलासिनी।
सर्वगा सुविचारा च वञ्चनी चेति शक्तयः ॥ २०६ ॥
गोपव्यूहं समाख्यातं गोपाख्यी व्यूहमुच्यते।
भेदिनी छेदिनी चैव सर्वकारी क्षुधाशनी ॥ २०७ ॥
उच्छुष्मा चैव गान्धारी भस्माशी वडवानला।
प्रथमावरणञ्चैव द्वितीयावरणं शृणु ॥ २०८ ॥
अन्धा बाह्वाशिनी बाला दीप्ता भ्रमा तथैव च।

अघा तरघा च हृल्लेखा हृल्लता मायिका परा॥२०९॥
आमया सादिनी भिन्नी सद्यासद्या सरस्वती।
रुद्रशक्तिर्महाशक्तिर्महामोहा च गोनदी॥ २१० ॥
गोपायी कथितं व्यूहं नन्दव्यूहं वदामि ते।
नन्दिनी च निवृत्तिश्च प्रतिष्ठा च यथाक्रमम्॥ २११॥
विद्यानासा खशसिनी चामुण्डा प्रियदर्शिनी।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु॥२१२॥
ब्रह्मा नारायणी मोहा प्रजा देवी च चक्रिणी।
कङ्कटा च तथा काली शिवाघोषा ततः परम्॥२१३॥
विरामाया च वागीशी वाहिनी भीषिणी तथा।
सुगमा चैव निर्दिष्टा द्वितीयावरणे स्मृता॥२१४॥
नन्दव्यूहं मयाख्यातं नन्दाया व्यूहमुच्यते।
विनायकी पूर्णिमा च रङ्कारी कुण्डली तथा॥२१५॥
इच्छा कपालिनी चैव दीपिनी च जयन्तिका।
प्रथमावरणे चाष्टौ शक्तयः परिकीर्त्तिताः॥ २१६॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु।
पावनी चाम्बिका चैव सर्वात्मा पूतना तथा॥२१७॥
छगली मोदिनी साक्षाद्देवी लम्बोदरी तथा।
संहारी कालिनी चैव कुसुमा च यथाक्रमम्॥२१८॥
शुक्रा तारा तथा ज्ञाना क्रिया गायत्रिका तथा।
सावित्री चेति विधिना द्वितीयावरणं स्मृतम्॥२१९॥
नन्दायाः कथितं व्यूहं पैतामहमतः परम्।
नन्दिनी चैव फेत्कारी क्रोधा हंसा षडङ्गुला॥ २२०॥
आनन्दा वसुदुर्गा च संहारा ह्यमृताष्टमी।

प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ २१ ॥
कुलान्तिका नला चैव प्रचण्डा मर्दिनी तथा ।
सर्वभूता भया चैव दया च वडवामुखी ॥ २२ ॥
लम्पटा पन्नगा देवी कुसुमा विपुलान्तका ।
केदारा च तथा कूर्मा दुरिता मन्दरोदरी ॥ २३ ॥
खड्गचक्रेति विधिना द्वितीयावरणं स्मृतम् ।
व्यूहे पैतामहं प्रोक्तं धर्मकामार्थमुक्तिदम् ॥ २४ ॥
पितामहाया व्यूहस्य कथयामि शृणुष्व मे ।
वज्रा च नन्दनाशा वा राविका रिपुभेदिनी ॥ २५ ॥
रूपा चतुर्थी योगा च प्रथमावरणे स्मृताः ।
भूता नादा महाबाला खर्परा च तथा परा ॥ २६ ॥
भस्मा कान्ता तथा वृष्टिर्द्विभुजा ब्रह्मरूपिणी ।
सैष्या येकारिका जाता कर्ममोटी तथा परा ॥ २७ ॥
महामोहा महामाया गान्धारी पुष्पमालिनी ।
शब्दापी च महाघोषा षोड़शैव तथान्तिमे ॥ २८ ॥
सर्वाश्च द्विभुजा देव्यो बालभास्करसन्निभाः ।
पद्मशङ्खधराः शान्ता रक्तस्रग्वस्त्रभूषणाः ॥ २९ ॥
सर्वाभरणसम्पूर्णा मुकुटाद्यैरलङ्कृताः ।
मुक्ताफलमयैर्दिव्यै रत्नचित्रैर्मनोरमैः ॥ ३० ॥
विभूषिता गौरवर्णा ध्येया देव्यः पृथक् पृथक् ।
एवं सहस्रकलशं ताम्रजं मृन्मयन्तु वा ॥ ३१ ॥
पूर्वोक्तलक्षणैर्युक्तं वद्धूने वै प्रतिष्ठितम् ।
भवाद्यैर्विष्णुना प्रोक्तैर्नामभिश्चैव सहस्रकैः ॥ ३२ ॥
सम्पूज्य विन्यसेदग्नौ सेचयेद्धाणविग्रहम् ।

अभिषिच्य च विन्नाप्य सेचयेत् पृथिवीपतिम् । ३३ ॥
एवं सहस्रकलशं सर्वसिद्धिफलप्रदम् ।
चत्वारिंशन्महाव्यूहं सर्वलक्षणलक्षितम् ॥ ३४ ॥
सर्वेषां कलशं प्रोक्तं पूर्ववद्धेमनिर्मितम् ।
सर्वे गन्धाम्बुसम्पूर्णं पञ्चरत्नसमन्विताः ॥ ३५ ॥
तथा कनकसंयुक्ता देवस्य घृतपूरिताः ।
क्षीरेण वाथ दध्ना वा पञ्चगव्येन वा पुनः ॥ ३६ ॥
ब्रह्मकूर्चेन वा मेध्यमभिषेको विधीयते ।
रुद्राध्यायेन रुद्रस्य नृपतेः शृणु सत्तम! ॥ ३७ ॥
अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ३८ ॥
मन्त्रेणानेन राजानं सेचयेदभिषेचितम् ।
होमश्च मन्त्रेणानेन अघोरेणाघहारिणा ॥ ३९ ॥
प्रागाद्यं देवकुण्डे वा स्थण्डिले वा घृतादिभिः ।
समिदाज्यं चरुं लाजशालिनी वारतण्डुलैः ॥४०॥
अष्टोत्तरशतं हुत्वा राजानमधिवासयेत् ।
पश्चाद्दं स्वस्ति रुद्राय कौतुकं हेमनिर्मितम् ॥४१॥
असितश्च मृणालेन बन्धयेद्दक्षिणे करे ।
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ॥ ४२ ॥
उर्वारुकमिव बन्धनात् मृत्योर्मुक्षीयमामृतात् ।
मन्त्रेणानेन राजानं सेचयेदाथ होमयेत् ॥४३॥
सर्वद्रव्याभिषेकञ्च होमद्रव्यैर्यथाक्रमम् ।
प्रागाद्यं ब्रह्मभिः प्रोक्तं सर्वद्रव्यैर्यथाक्रमम् ॥४४॥
तत्पुरुषाय विद्महे महादेवाय धीमहि ।

तन्नो रुद्रः प्रचोदयात् ॥ ४५ ॥

स्वाहान्तं पुरुषेणैव प्राक्कुण्डे होमयेद् द्विजः।

अघोरेण च याम्ये च होमयेत् कृष्णवाससा ॥४६॥

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः।

इत्याद्युक्तक्रमेणैव जुहुयात्पश्चिमे नरः ॥ ४७ ॥

सद्येन पश्चिमे होमः सर्वद्रव्यैर्यथाक्रमम्।

सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमः॥ ४८ ॥

भवे भवेनातिभवे भवस्व मां भवोद्भवाय नमः।

स्वाहान्तं जुहुयादग्नौ मन्त्रेणानेन बुद्धिमान् ॥४९॥

आग्नेय्यान्तु विधानेन ऋचा रौद्रेण होमयेत्।

जातवेदसे सुनवाम सोममित्यादि।

नैऋते पूर्ववद् द्रव्यैः सर्वैर्होमो विधीयते ॥ ५० ॥

मन्त्रेणानेन दिव्येन सर्वसिद्धिकरेण च।

निशि निशि दिश स्वाहा खड्ग! राक्षसभेदन! ॥५१॥

रुधिराज्यार्द्रने ऋत्ये स्वाहा नमः स्वधा नमः।

यथेष्टं विधिना द्रव्यैर्मन्त्रेणानेन होमयेत्। ५२ ॥

यस्यां हि विविधैर्द्रव्यैरीशानेन द्विजोत्तमाः!।

ईशान्यामथ पूर्वोक्तैर्द्रव्यैर्होममथाचरेत् ॥ ५३ ॥

ईशानाय कद्रुद्राय प्रचेतसे त्र्यम्बकाय शर्वाय।

तन्नो रुद्रः प्रचोदयात् ॥ ५४ ॥

प्रधानं पूर्ववद् द्रव्यैरीशानेन द्विजोत्तमाः!।

प्रतिद्रव्यं सहस्रेण जुहुयान् नृपसन्निधौ ।५५॥

स्वयं वा जुहुयादग्नौ भूपतिः शिववत्सलः।

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपति-

ॐ ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिव ओम्॥५६॥
प्रायश्चित्तमघोरेण शेषं सामान्यमाचरेत् ।
कृताधिवासं राजानं शङ्खभेर्य्यादिनिस्वनैः ॥ ५७ ॥
जयशब्दरवैर्दिव्यैर्वेदघोषैः सुशोभनैः ।
सेचयेत् कूर्चतोयेन प्रोक्षयेद्वा नृपोत्तमम् ॥ ५८ ॥
रुद्राध्यायेन विधिना रुद्रभक्ताङ्गधारिणम् ।
शङ्खचामरभेर्य्याद्यं छत्रं चन्द्रसमप्रभम् ॥ ५९ ॥
शिबिकां वैजयन्तीञ्च साधयेन् नृपतेः शुभाम् ।
राज्याभिषेकयुक्ताय क्षत्रियायेश्वराय वा ॥ ६० ॥
नृपचिह्नानि नान्येषां क्षत्रियाणां विधीयते ।
प्रमाणञ्चैव सर्वेषां द्वादशाङ्गुलमुच्यते ॥ ६१ ॥
पलाशो दुम्बरोऽश्वत्थवटाः पूर्वादितः क्रमात् ।
तोरणाद्यानि वै तत्र पट्टमात्रेण पट्टिकाः ॥ ६२ ॥
अष्टमाङ्गुल संयुक्तदर्भमालासमावृतम् ।
दिग्ध्वजाष्टकसंयुक्तं द्वारकुम्भैः सुशोभनम् ॥ ६३ ॥
हेमतोरणकुम्भैश्च भूषितं स्नापयेन्नृपम् ।
सर्वोपरि समासीनं शिवकुम्भेन सेचयेत् ॥ ६४ ॥
तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि ।
तन्नः शिवः प्रचोदयात् ॥ ६५ ॥
मन्त्रेणानेन विधिना वर्द्धन्या गौरिगीतया ।
रुद्राध्यायेन वा सर्वमघोरेणाथवा पुनः ॥ ६६ ॥
दिव्यैराभरणैः शक्रैर्मुकुटाद्यैः सुकल्पितैः ।
क्षौमवस्त्रैश्च राजानं तोषयेन्नियतं शनैः ॥ ६७ ॥
अष्टषष्टिपलेनैव हेम्ना कृत्वा सुदर्शनम् ।

नवरत्नैरलङ्कृत्य दद्याद्वै दक्षिणां गुरोः ॥ ६८ ॥
दशधेनु सवत्सञ्च दद्यात् चैत्रं सुशोभनम्।
शतद्रोणतिलञ्चैव शतद्रोणञ्च तण्डुलान् ॥ ६९ ॥
शयनं वाहनं शय्यां सोपधानां प्रदापयेत्।
योगिनाञ्चैव सर्वेषां त्रिंशत् पलमुदाहृतम् ॥ ७० ॥
अशेषांश्च तद्द्रेन शिवभक्तांस्तदर्हतः।
महापूजां ततः कुर्य्यान्महादेवस्य वै नृपः ॥ ७१ ॥
एवं समासतः प्रोक्तं जय सेचनमुत्तमम्।
एवं पुराभिषिक्तस्तु शक्रः शक्रत्वमागतः ॥ ७२ ॥
ब्रह्मा ब्रह्मत्वमापन्नो विष्णुर्विष्णुत्वमागतः।
अम्बिका चाम्बिकात्वञ्च सौभाग्यमतुलं तथा ॥७३॥
सावित्री च तथा लक्ष्मीर्देवी कात्यायनी तथा।
नन्दिनाथ पुरा मृत्युरुद्राध्यायेन वै जितः ॥ ७४ ॥
अभिषिक्तोऽसुरः पूर्वं तारकाख्यो महाबलः।
विद्युन्माली हिरण्याक्षो विष्णुना वै विनिर्जितः ॥७५॥
नृसिंहेन पुरा दैत्यो हिरण्यकशिपुर्हतः।
स्कन्देन तारकाद्याश्च कौशिक्या च पुराम्बया ॥ ७६ ॥
सुन्दोपसुन्दतनयौ जितौ दैत्येन्द्रपूजितौ।
वसुदेव सुदेवौ तु निहतौ कृतकृत्यया ॥ ७७ ॥
स्नानयोगेन विधिना ब्रह्मणा निर्मितेन तु।
देवासुरे दितिसुता जिता देवैरनिन्दिताः ॥ ७८ ॥
स्नाप्यैव सर्वभूपैश्च तथान्यैरपि भूसुरैः।
प्रासाद सिद्धयो दिव्या नात्र कार्य्या विचारणा ॥७९॥
अस्तोऽभिषेकमाहात्म्यमङ्गो शुद्रसुभाषितम्।

येनैवमभिषिक्तेन सिद्धं सं त्युर्जितस्त्विति ॥ ८० ॥
कल्पकोटिशतेनापि यत्पापं समुपार्जितम् ।
स्नात्वैवं मुच्यते राजा सर्वपापैर्न संशयः ॥ ८१ ॥
व्याधितो मुच्यते राजा क्षयकुष्ठादिभिः पुनः ।
स नित्यं विजयी भूत्वा पुत्रपौत्रादिभिर्युतः ॥ ८२ ॥
जनानुरागसम्पन्नो देवराज इवापरः ।
मोदते पापहीनश्च प्रियया धर्मनिष्ठया ॥ ८३ ॥
उद्देशमात्रं कथितं फलं परमशोभनम् ।
नृपाणामुपकाराय स्वायम्भुवमनो मया ॥ ८४ ॥

इति आदि महापुराणे श्रीलैङ्गे उत्तरार्द्धे अभिषेक-
विधिर्नाम सप्तविंशतितमोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशतितमोऽध्यायः ।

सूत उवाच ।
स्नात्वा देवं नमस्कृत्य देवदेवमुमापतिम् ।
दिव्येन चक्षुषा रुद्रं नीललोहितमीश्वरम् ॥ १ ॥
दृष्ट्वा तुष्टाव वरदं रुद्राध्यायेन शङ्करम् ।
देवोऽपि तुष्ट्या निर्वाण्यं राज्यान्ते कर्मणैव तु ॥ २ ॥

तथास्त्विति स चक्षोक्ता तत्रैवान्तरधीयत ।
स्वायम्भुवो मनुर्देवं नमस्कृत्य वृषध्वजम् ॥ ३ ॥
आरुरोह महामेरुं महावृषमिवेश्वरः ।
तत्र देवं हिरण्याभं योगैश्वर्यं समन्वितम् ॥ ४ ॥
सनत्कुमारं वरदमपश्यद् ब्रह्मणः सुतम् ।
नमश्चकार वरदं ब्रह्मण्यं ब्रह्मरूपिणम् ॥ ५ ॥
कृताञ्जलिपुटो भूत्वा तुष्टाव च महाद्युतिः ।
सोऽपि दृष्ट्वा मनुं देवो हृष्टरोमा भवन्मुनिः ॥ ६ ॥
सनत्कुमारः प्राहेदं घृणया च घृणानिधे ! ।

सनत्कुमार उवाच ।

दृष्ट्वा सर्वेश्वरा च्छान्ताच्छङ्करान्नीललोहितात् ॥ ७ ॥
लब्धाभिषेकं सम्प्राप्तो विवक्षुर्वद यद्यपि ।
तस्य तद्वचनं श्रुत्वा प्रणिपत्य कृताञ्जलिः ॥ ८ ॥
विज्ञापयामास कथं कर्मणा निर्वृतिर्विभो ।
वक्तुमर्हसि चास्माकं कर्मणा केवलेन च ॥ ९ ॥
ज्ञानेन निर्वृतिः सिद्धा विभो ! मिश्रेण वा क्वचित् ।
अथ तस्य वचः श्रुत्वा श्रुतिसारविदां निधिः ॥ १० ॥
सनत्कुमारो भगवान् कर्मणा निर्वृतिः क्रमात् ।
मिश्रेण च क्रमादेव क्षणात् ज्ञानेन वै मुने ! । ११ ॥
पुरा मानेन चोष्ट्रत्वमगमं नन्दिनः प्रभोः ! ।
शापात् पुनः प्रसादाद्धि शिवमभ्यर्च्य शङ्करम् ॥ १२ ॥
प्रसादान्नन्दिनस्तस्य कर्मणैव सुतोऽप्यहम् ।
श्रुत्वोत्तमां गतिं दिव्यामवस्थां प्राप्तवानहम् ॥ १३ ॥
शिवार्चनप्रकारेण शिवधर्मेण नान्यथा ।

राज्ञां षोड़शदानानि नन्दिना कथितानि च ॥ १४ ॥
धर्मकामार्थमुक्त्यर्थं कर्मणैव महात्मना ।
तुलादिरोहणाद्यानि शृणु तानि यथातथम् ॥ १५ ॥
ग्रहणादिषु कालेषु शुभदेशेषु शोभनम् ।
विंशद्धस्तप्रमाणेन मण्डपं कूटमेव च ॥ १६ ॥
यथाष्टादशहस्तेन कलाहस्ते न वा पुनः ।
कृत्वा वेदिं तथा मध्ये नवहस्तप्रमाणतः ॥ १७ ॥
अष्टहस्ते न वा कार्य्या सप्तहस्तेन वा पुनः ।
द्विहस्ता सार्द्धहस्ता वा वेदिका चातिशोभना ॥ १८ ॥
द्वादशस्तम्भसंयुक्ता साधुरम्या भ्रमन्तिका ।
परितो नवकुण्डानि चतुरस्राणि कारयेत् ॥ १९ ॥
ऐन्द्र ईशानयोर्मध्ये प्रधानं ब्रह्मणः सुत ! ।
अथवा चतुरस्रञ्च योऽन्याकारमतः परम् ॥ २० ॥
स्त्रीणां कुण्डानि विप्रेन्द्रा ! योऽन्याकाराणि कारयेत्।
अर्द्धचन्द्रं त्रिकोणञ्च वर्त्तुलं कुण्डमेव च ॥ २१ ॥
षड़स्रं सर्वतो वापि त्रिकोणं पद्मसन्निभम् ।
अष्टास्रं सर्वमाने तु स्थण्डिलं केवलन्तु वा ॥ २२ ॥
चतुर्द्वारसमोपेतं चतुस्तोरणभूषितम् ।
दिग्गजाष्टकसंयुक्तं दर्भमाला समावृतम् ॥ २३ ॥
अष्टमङ्गलसंयुक्तं वितानोपरिशोभितम् ।
तुलास्तम्भद्रुमाश्चात्र बिल्वादीनि विशेषतः ॥ २४ ॥
बिल्वाश्वत्थपलाशाद्याः केवलं खादिरन्तु वा ।
येन स्तम्भः कृतः पूर्वं तेन सर्वन्तु कारयेत् ॥ २५ ॥
अथवा मिश्रमार्गेण वेणुना वा प्रकल्पयेत् ।

अष्टहस्तप्रमाणन्तु हस्तद्वयसमायुतम ॥ २६ ॥
तुला स्तम्भस्य विष्कम्भोऽमाद्दतस्त्रिगुणोमतः ।
द्वाङ्गुलेन विहीनन्तु सुवृत्तं निव्रणं तथा ॥ २७ ॥
उभयोरन्तरश्चैव षड्ढस्तं नृपते स्मृतम् ।
द्वयोश्चतुर्हस्तकृतमन्तरं स्तम्भयोरपि ॥ २८ ॥
षड्ढस्तमन्तरं ज्ञेयं स्तम्भयोरुपरि स्थितम् ।
वितस्तिमात्रं विस्तारो विष्कम्भस्तावदुत्तरम् ॥ २८ ॥
स्तम्भयोस्तु प्रमाणेन उत्तरद्वारसम्मितम् ।
षट्त्रिंशन्मात्रसंयुक्तं व्यायामन्तु तुलात्मकम् ॥३०॥
विष्कम्भमष्टमात्रन्तु यवपञ्चकसंयुतम् ।
षट्त्रिंशन्मात्रनाभं स्यान्निर्माणाद्दतुलं शुभम् ॥३१॥
अग्रे मूले च मध्ये च हैमपट्टेन बन्धयेत् ।
पट्टमध्ये प्रकर्त्तव्यमवलम्बनकत्रयम् ॥ ३२ ॥
ताम्रेण च प्रकर्त्तव्यमवलम्बनकत्रयम् ।
आरेण वा प्रकर्त्तव्यमायसं नैव कारयेत् ॥ ३३ ॥
मध्ये चोर्ध्वमुखं कार्य्यमवलम्बं सुशोभनम् ।
रश्मिभिस्तोरणाग्रे वा बन्धयेच्च विधानतः ॥ ३४ ॥
जिह्वामिकां तुलामध्ये तोरणन्तु विधीयते ।
उत्तरस्य च मध्ये च शङ्कुं दृढमनुत्तमम् ॥ ३५ ॥
विताने नोपरि च्छाद्य दृढं सम्यक् प्रयोजयेत् ।
शङ्कोः सुषिरसम्पन्नं वलयं कारयेन्मुने ! ॥३६॥
तुलामध्ये वितानेन तुलया बन्धके तथा ।
वलयेन प्रयोक्तव्यं कुण्डलं वावलम्बनम् ॥ ३७ ॥
सुदृढञ्च तुलामध्ये नवमाङ्गुलमानतः ।

पद्मस्यैव तु विस्तारं पद्ममात्रप्रमाणतः ॥ ३८ ॥
अपरौ सुदृढ़ौ पिण्डौ शुभद्रव्येण कारयेत्
शिक्याधस्तात् प्रकर्त्तव्यौ पद्म प्रादेशविस्तरौ ।
सहस्रेण तु कर्त्तव्यौ पलानां धारकावुभौ ॥ ३९ ॥
शताष्टकेन वा कुर्य्यात् पलैः षट्शतमेव वा ।
चतुस्तालश्च कर्त्तव्यं विस्तारं मध्यमं तथा ॥ ४० ॥
सार्द्धवितालं विस्तारं कलशस्य विधीयते ।
बध्नीयात् पद्मपात्रन्तु त्रिमात्रं षट्कमुच्यते ॥ ४१ ॥
चतुर्द्वारसमोपेतं द्वारमङ्गुलमात्रकम् ।
कुण्डलैश्च समोपेतैः शुक्लशङ्खसमन्वितैः ॥ ४२ ॥
कुण्डले कुण्डले कार्य्यं शृङ्खला परिमण्डलम् ।
शृङ्खलाधारवलयमवलम्बेन योजयेत् ॥ ४३ ॥
प्रादेशं वा चतुर्मात्रं भूमेस्त्यक्त्वावलम्बयेत् ।
घटौ पुरुषमात्रौ तु कर्त्तव्यौ शोभनावुभौ ॥ ४४ ॥
तौ वालुकाभिः सम्पूर्य्य शिवं तत्र विनिक्षिपेत् ।
द्विहस्तमात्रमवटे स्थापनीयौ प्रयत्नतः ॥ ४५ ॥
निःशेषं पूरयेद् विद्वान्वालुकाभिः समन्ततः ।
येन निश्चलतां गच्छेत्तेन मार्गेण कारयेत् ॥ ४६ ॥
श्रूयतां परमं गुह्यं वेदिकोपरि मण्डलम् ।
अष्टमाङ्गुलसंयुक्तं अङ्कुलाङ्कुरशोभितम् ॥ ४७ ॥
फलपुष्पसमाकीर्णं धूपदीपसमन्वितम् ।
वेदिमध्ये प्रकर्त्तव्यं दर्पणोदरसन्निभम् ॥ ४८ ॥
आलिखेन्मण्डलं पूर्वं चतुर्द्वारसमन्वितम् ।
शोभोपशोभासम्पन्नं कर्णिका केसरान्वितम् ॥ ४९ ॥

वर्णजातिसमोपेतं पञ्चवर्णन्तु कारयेत्।
वज्रं प्रागन्तरे भागे आग्नेय्यां शक्तिमुज्ज्वलाम्॥ ५०॥
आलिखेद्दक्षिणे दण्डं नैर्ऋत्यां खड्गमालिखेत्।
पाशञ्च वारुणे लेख्यं ध्वजं वै वायुगोचरे॥ ५१॥
कौबेर्य्यान्तु गदा लेख्या ऐशान्यां शूलमालिखेत्।
शूलस्य वामदेशेन चक्रं पद्मन्तु दक्षिणे॥ ५२॥
एवं लिखित्वा पश्चाच्च होमकर्म समाचरेत्।
प्रधानहोमङ्गायत्र्या स्वाहा शक्राय वह्नये॥ ५३॥
यमाय राक्षसेशाय वरुणाय च वायवे।
कुबेरायेश्वरायाथ विष्णवे ब्रह्मणे पुनः॥ ५४॥
स्वाहान्तं प्रणवेनैव होतव्यं विधिपूर्वकम्।
स्वशाखाग्निमुखे नैव जयादि प्रति संयुतम्॥ ५५॥
स्विष्टान्तं सर्वकार्य्याणि कारयेद् विधिवत्तदा।
सर्वहोमाशहोमे च समित् पालाशमुच्यते।
एकविंशति संख्यातं मन्त्रेणानेन होमयेत्॥ ५६॥

अयन्त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्द्धस्व चेद्ध-वर्द्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसे नान्नाद्येन स मेधय स्वाहा। भूः स्वाहा भुवः स्वाहा स्वः स्वाहा भूर्भुवः स्वस्तथैव च समिद्धोमश्च चरुणा घृतस्य च यथाक्रमं शुक्लान्नपायसञ्चैव मुद्गान्नञ्चरवः स्मृताः॥ ५७।

सहस्रं वा तदर्द्धं वा शतमष्टोत्तरन्तु वा॥ ५८॥
अग्न आयूंषि पवस आसुवोर्जमिषञ्च नः आरे बाधस्व दुच्छुनां अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः तमीमहे महा-गयं अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्य्यं दधद्रयिं मयि

योमं प्रजापते नत्वदेतान्य न्योविश्वा जातानि परिता बभूव
यत् कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयोरयीणां।

गायत्र्या च प्रधानस्य समिद्धोमस्तथैव च ।
चरुणा च तथाज्यस्य शक्रादीनाञ्च होमयेत् ॥ ५८ ॥
वज्रादीनाञ्च होतव्यं सहस्रार्धं ततः क्रमात् ।
ब्रह्मयज्ञेति मन्त्रेण ब्रह्मणे विष्णवे पुनः ॥ ६० ॥
नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः
प्रचोदयात् ।
अयं विशेषः कथितो होममार्गः सुशोभनः
दूर्वया क्षीरयुक्तेन पञ्चविंशत् पृथक् पृथक् ॥ ६१ ॥
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्वारुकमिव बन्धनान् मृत्योर्मुक्षीय मामृतात् ॥६२॥
दूर्वा होमः प्रशस्तोऽयं वास्तु होमश्च सर्वथा ।
प्रायश्चित्तमघोरेण सर्पिषा च शतं शतम् ॥ ६३ ।
ब्रह्माणं दक्षिणे वामे विष्णुं विश्वगुरुं शिवम् ।
मध्ये देव्या समं श्रेयमिन्द्रादिगणसंवृतम् ॥ ६४ ॥
आदित्यं भास्करं भानुं रविं देवं दिवाकरम् ।
उषां प्रभां तथा प्रज्ञां सन्ध्यां सावित्रिमेव च ॥ ६५ ।
पञ्चप्राकारविधिना खखोल्काय महात्मने ।
विष्टरां सुभगाञ्चैव वर्द्धनीञ्च प्रदक्षिणाम् ॥ ६६ ॥
आप्यायनीञ्च सम्पूज्य देवीं पद्मासने रविम् ।
प्रभूतं वाय कर्त्तव्यं विमलं दक्षिणे तथा ॥ ६७ ॥
सारं पश्चिमभागे च आराध्यञ्चोत्तरे यजेत् ।
मध्ये सुखं विजानीयात् केसरेषु यथाक्रमम् ॥ ६८ ॥

दीप्तां सूक्ष्मां जयां भद्रां विभूतिं विमलां क्रमात् ।
अमोघां विद्युताञ्चैव मध्यतः सर्वतोमुखीम् ॥ ६८ ॥
सोममङ्गारकञ्चैव बुधं गुरुमनुक्रमात् ।
भार्गवञ्च तथा मन्दं राहुं केतुं तथैव च ॥ ७० ॥
पूजयेद्धोमयेद्देवं दापयेच्च विशेषतः ।
योगिनो भोजयेत्तत्र शिवतत्त्वैकपारगान् ॥ ७१ ॥
दिव्याध्ययनसम्पन्नान् कृत्वैवं विधिविस्तरम् ।
होमे प्रवर्त्तमाने च पूर्वदिक् स्थानमध्यमे ॥ ७२ ॥
आरोहयेद्विधानेन रुद्राध्यायेन वै नृपम् ।
धारयेत्तत्र भूपालं घटिकैकां विधानतः ॥ ७३ ॥
यजमानो जपेन्मन्त्रं रुद्रगायत्रिसंज्ञकम् ।
घटिकार्द्धं तदर्द्धं वा तत्रैवासनमारभेत् ॥ ७४ ॥
आलोक्य वारुणं धीमान् कूर्चहस्तः समाहितः ।
नृपश्च भूषणैर्युक्तः खड्गखेटकधारकः ॥ ७५ ॥
स्वस्तिरित्यादिभिश्चादावन्ते चैव विशेषतः ।
पुण्याहं ब्राह्मणैः कार्य्यं वेदवेदाङ्गपारगैः ॥ ७६ ॥
जयमङ्गलशब्दादि ब्रह्मघोषैः सुशोभनैः ।
नृत्यवाद्यादिभिर्गीतैः सर्वशोभासमन्वितैः ॥ ७७ ॥
स्वमेवं चन्द्रदिग्भागे सुवर्णं तत्र विक्षिपेत् ।
तुलाधारी समौ हस्तौ तुलाभारः सदा भवेत् ॥ ७८ ॥
शतनिष्काधिकं श्रेष्ठं तदर्द्धं मध्यमं स्मृतम् ।
तस्यार्द्धञ्च कनिष्ठं स्यात्त्रिविधं तत्र कल्पितम् ॥ ७९॥
वस्त्रयुग्ममथोष्णीषं कुण्डलं कण्ठशोभनम् ।
अङ्गुलीभूषणञ्चैव मणिबन्धस्य भूषणम् ॥ ८० ॥

एतानि चैव सर्वाणि प्रारभ्य धर्मकर्मणि।
पाशुपतव्रतायाथ भस्माङ्गाय प्रदापयेत्॥ ८१॥
पूर्वोक्तभूषणं सर्वं सोष्णीषं वस्त्रसंयुतम्।
दद्यादेतत् प्रयोक्तृभ्य आच्छादनपटं बुधः॥ ८२॥
दक्षिणाञ्च शतं साईल्लदर्द्धं वा प्रदापयेत्।
योगिनाञ्चैव सर्वेषां पृथक् निष्कं प्रदापयेत्॥ ८३॥
यागोपकरणं दिव्यमाचार्य्याय प्रदापयेत्।
इतरेषां यतीनान्तु पृथक् निष्कं प्रदापयेत्॥ ८४॥
तुलारोह सुवर्णञ्च शिवाय विनिवेदयेत्।
प्रासादं मण्डपञ्चैव प्राकारं भूषणं तथा॥ ८५॥
सुवर्णपुष्पं पटहं खड्गं वै कोशमेव च।
कृत्वा दत्वा शिवायाथ किञ्चिच्छेषञ्च बुद्धिमान्॥ ८६॥
आचार्य्येभ्यः प्रदातव्यं भस्माङ्गिभ्यो विशेषतः।
वन्दीकृतान् विसर्ज्याथ कारागृहनिवासिनः॥ ८७॥
सहस्रकलशैस्तत्र सेचयेत् परमेश्वरम्।
घृतेन केवलेनापि देवदेवमुमापतिम्॥ ८८॥
पयसा वाथ दध्ना वा सर्वद्रव्यैरथापि वा।
ब्रह्मकूर्चेन वा देवं पञ्चगव्येन वा पुनः॥ ८९॥
गायत्र्या चैव गोमूत्रं गोमयं प्रणवेन वा।
आप्यायस्वेति वै क्षीरं दधिक्राव्णेति वै दधि॥ ९०॥
तेजोऽसीत्याज्यमीशानमन्त्रेणैवाभिषेचयेत्।
देवस्य त्वेति देवेशं कुशाम्बुकलशेन वै॥ ९१॥
रुद्राध्यायेन वा सर्वं स्नापयेत् परमेश्वरम्।
सहस्रकलशं गर्भैर्नानाञ्चैव सहस्रकैः॥ ९२॥

विष्णुना कथितैर्वापि तज्ज्ञेना कथितैस्तु वा।
दक्षेण मुनिमुख्येन कीर्त्तितैरथवा पुनः ॥ ८३ ॥
महापूजा प्रकर्त्तव्या महादेवस्य भक्तितः।
शिवार्चकाय दातव्या दक्षिणा स्वगुरोः सदा ॥ ८४ ॥
देहार्णवस्य सर्वेषां दक्षिणा च यथाक्रमम्।
दीनान्धकृपणानाञ्च बालवृद्धकृशातुरान् ॥ ८५ ॥
भोजयेच्च विधानेन दक्षिणामपि दापयेत् ॥ ८६ ॥

इति आदि महापुराणे श्रीलैङ्गे उत्तरार्द्धे तुलापुरुषदान-
विधावष्टाविंशत्तमोऽध्यायः ॥ २८ ॥



## एकोनत्रिंशत्तमोऽध्यायः।

---

सनत्कुमार उवाच।
तुला ते कथिता ह्येषा आद्या सामान्यरूपिणी।
हिरण्यगर्भं वक्ष्यामि द्वितीयं सर्वसिद्धिदम् ॥ १ ॥
अधः पात्रं सहस्रेण हिरण्येन विधीयते।
ऊर्द्धपात्रं तदर्धेन मुखं सर्वेशमात्रकम् ॥ २ ॥
हैममेवं शुभं कुर्य्यात् सर्वालङ्कारसंयुतम्।
अधः पात्रे अरेदेवीं गुणत्रयसमन्विताम् ॥ ३ ॥

चतुर्विंशतिकां देवीं ब्रह्मविष्णुग्निरूपिणीम् ।
ऊर्द्ध्वपादे गुणातीतं षड्विंशकमुमापतिम् ॥ ४ ॥
आत्मानं पुरुषं ध्यायेत् पञ्चविंशकमग्रजम् ।
पूर्वोक्तस्थानमध्येऽथ वेदिकोपरिमण्डले ॥ ५ ॥
शालिमध्ये क्षिपेच्छीत्वा नववस्त्रैश्च वेष्टयेत् ।
मापकल्केन चालिप्य पञ्चद्रव्येण पूजयेत् ॥ ६ ॥
ईशानाद्यैर्यथान्यायं पञ्चभिः परिपूजयेत् ।
पूर्ववच्छिवपूजा च होमश्चैव यथाक्रमम् ॥ ७ ॥
देवीं गायत्रिकां जप्त्वा प्रविशेत् प्राङ्मुखः स्वयम् ।
विधिनैव तु सम्पाद्य गर्भाधानादिकां क्रियाम् ॥ ८ ॥
कृत्वा षोड़शमार्गेण विधिना ब्राह्मणोत्तमः ।
दूर्वाङ्कुरैस्तु कर्त्तव्या सेचना दक्षिणे पुटे ॥ ९ ॥
औदुम्बरफलैः सार्द्धमेकविंशत् कुशोदकम् ।
ईशान्यां तावदेवात्र कुर्य्यात् सीमन्तकर्मणि ॥ १० ॥
उद्वहेत् कन्यकां कृत्वा त्रिंशच्छिक्येण शोभनाम् ।
अलङ्कृत्य तथा हुत्वा शिवाय विनिवेदयेत् ॥ ११ ॥
अन्नप्राशनके विद्वान् भोजयेत् पायसादिभिः ।
एवं विश्वजितात्मा वै गर्भाधानादिका क्रिया ॥१२॥
अग्निबीजेन कर्त्तव्या ब्राह्मणैर्वेदपारगैः ।
शेषं सर्वञ्च विधिवत्कृत्वा हेमवदाचरेत् ॥ १३ ॥

इति महापुराणे श्रीलैङ्गे उत्तरार्द्धे एकोन-
त्रिंशत्तमोऽध्यायः ॥ २९ ॥



# त्रिंशत्तमोऽध्यायः।

सनत् कुमार उवाच।

अधुना सम्प्रवक्ष्यामि तिलपर्वतमुत्तमम्।
पूर्वोक्तस्नानकाले तु कृत्वा सम्पूज्य यत्नतः॥ १॥
सुसमे भूतले रम्ये वेदिना च विवर्जिते।
दशतालप्रमाणेन दण्डं संस्थाप्य वै मुने!॥ २॥
अद्भिः सम्प्रोक्ष्य पश्चाद्धि तिलांस्तस्मिन् विनिक्षिपेत्
पञ्चगव्येन तं देशं प्रोक्षयेद् ब्राह्मणोत्तमः॥ ३॥
मण्डलं कल्पयेद्विद्वान् पूर्ववत् सुसमन्ततः।
नववस्त्रैश्च संस्थाप्य रम्यपुष्पैर्विकीर्य्य च॥ ४॥
तस्मिन् सञ्चयनं कार्य्यं तिलभारैर्विशेषतः।
दण्डप्रादेशमुत्सेधमुत्तमं परिकीर्त्तितम्॥ ५॥
चतुरङ्गुलहीनन्तु मध्यमं मुनिपुङ्गवाः!।
दण्डतुल्यं कनिष्ठं स्याद्दण्डहीनं न कारयेत्॥ ६॥
वेष्टयित्वा नवैर्वस्त्रैः परितः पूजयेत् क्रमात्।
सद्यादीनि प्रविन्यस्य पूजयेद्विधिपूर्वकम्॥ ७॥
अष्टदिक्षु च कर्त्तव्या पूर्वोक्ता मूर्त्तयः क्रमात्।
त्रिनिष्केण सुवर्णेन प्रत्येकं कारयेत् क्रमात्॥ ८॥
दक्षिणा विधिना कार्य्या तुलाभारवदेव तु।
होमश्च पूर्ववत् प्रोक्तो यथावन् मुनिसत्तमाः!॥ ९॥

अर्चयेद्देवदेवेशं लोकपालसमावृतम्।
तिलपर्वतमध्यस्थं तिलपर्वतरूपिणम्॥ १०॥
शिवार्चना च कर्त्तव्या सहस्रकलशादिभिः।
दर्शयेत्तिलमध्यस्थं देवदेवमुमापतिम्॥ ११॥
पूजयित्वा विधानेन क्रमेण च विसर्जयेत्।
श्रोत्रियाय दरिद्राय दापयेत्तिलपर्वतम्॥ १२॥
एवं तिलनगः प्रोक्तः सर्वस्मादधिकः परः॥ १३॥

इति महापुराणे श्रीलैङ्गे तिलपर्वतदानं नाम
त्रिंशोऽध्यायः॥ ३०॥



## एकत्रिंशत्तमोऽध्यायः।

---

सनत्कुमार उवाच।
अथान्यं पर्वतं सूक्ष्ममल्पद्रव्यं महाफलम्।
द्रव्यमात्रोपसंयुक्तं काले मेध्यं विधीयते॥ १॥
गोमयालिप्तभूमौ तु शुभ्रवाणि प्रकीर्य्य च।
तन्मध्ये निक्षिपेद्धीमान् तिलभारत्रयं शुभम्॥ २॥
पद्ममष्टदलं कुर्य्यात् कर्णिका केसरान्वितम्।
दग्धनिक्षेप तत् कार्य्यं तदर्द्धार्द्धेन वा पुनः॥ ३॥

तिलमध्ये न्यसेत् पद्मं पद्ममध्ये महेश्वरम् ।
आराध्य विधिवद्देवं वामादीनि प्रपूजयेत् ॥ ४ ॥
शक्तिरूपं सुवर्णेन त्रिनिष्केण तु कारयेत् ।
न्यासन्तु परितः कुर्याद् विघ्नेशान् परिभागतः ५ ॥
पूर्वोक्तहेममानेन विघ्नेशानपि कारयेत् ।
तानभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ॥ ६ ॥

इति आदि महापुराणे उत्तरार्द्धे एकत्रिंश-
त्तमोऽध्यायः ॥ ३१ ॥



## द्वात्रिंशत्तमोऽध्यायः ।

सनत्कुमार उवाच ।
जपहोमार्चना दानाभिषेकाद्यञ्च पूर्ववत् ।
सुवर्णमेदिनी दानं प्रवक्ष्यामि समासतः ॥ १ ॥
पूर्वोक्तदेशकाले तु कारयेन् मुनिभिः सह ।
लक्षणेन यथापूर्वं कुण्डे वा मण्डलेऽथवा ॥ २ ॥
मेदिनीं कारयेद्दिव्यां सहस्रेणापि वा पुनः ।
एकहस्तं प्रकर्त्तव्या चतुरस्रा सुशोभना ॥ ३ ॥
सप्तद्वीपसमुद्राद्यैः पर्वतैरभिसंवृता ।

सर्वतीर्थसमोपेता मध्ये मेरुसमन्विता ॥ ४ ॥
अथवा मध्यतो द्वीपं नवखण्डं प्रकल्पयेत्।
पूर्ववन्निखिलं कृत्वा मण्डले वेदिमध्यतः ॥ ५ ॥
सप्तभागैकभागेन सहस्राद्विधिपूर्वकम्।
शिवभक्ते प्रदातव्या दक्षिणा पूर्वचोदिता ॥ ६ ॥
सहस्रकलशाद्यैश्च शङ्करं पूजयेच्छिवम्।
सुवर्णमेदिनी प्रोक्तं लिङ्गेऽस्मिन् दानमुत्तमम् ॥ ७ ॥

इति आदि महापुराणे उत्तरार्द्धे सुवर्णमेदिनीदानं नाम द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥



## त्रयस्त्रिंशत्तमोऽध्यायः।

सनत्कुमार उवाच।

अथान्यत् सम्प्रवक्ष्यामि कल्पपादपमुत्तमम्।
शतनिष्केण कृत्वैवं सर्वशाखासमन्वितम् ॥ १ ॥
शाखानां विविधं कृत्वा मुक्तादामावलम्बनम्।
दिव्यैर्मारकतैश्चैव चाङ्कुराग्रं प्रविन्यसेत् ॥ २ ॥
प्रवालं कारयेद्विद्वान् प्रवालेन द्रुमस्य तु।
फलानि पद्मरागैश्च परितोऽस्य सुशोभयेत् ॥ ३ ॥

मूलञ्च नीलरत्नेन वर्णेन स्कन्धमुत्तमम् ।
वैदूर्य्येण द्रुमाग्रञ्च पुष्परागेण मस्तकम् ॥ ४ ॥
गोमेदकेन वै कन्दं सूर्य्यकान्तेन सुव्रत ! ।
चन्द्रकान्तेन वा वेदिं द्रुमस्य स्फटिकेन वा ॥ ५ ॥
वितस्तिमात्रमायामं वृक्षस्य परिकीर्त्तितम् ।
शाखाष्टकस्य मानञ्च विस्तारश्चोर्द्धतस्तथा ॥ ६ ॥
तन्मण्डले स्थापयेन्नित्यं लोकपालैः समावृतम् ।
पूर्वोक्तवेदिमध्ये तु मण्डले स्थाप्य पादपम् ॥ ७ ॥
पूजयेद्देवमीशानं लोकपालांश्च यत्नतः ।
पूर्ववत्कल्पहोमाद्यं तुलाभारवदाचरेत् ॥ ८ ॥
निवेदयेद् द्रुमं शम्भोर्योगिनां वाथवा नृप ! ।
भस्माङ्गिभ्योऽथ वा राजा सार्वभौमो भविष्यति ॥ ९ ॥

इति आदि महापुराणे श्रीलैङ्गे उत्तरार्द्धे त्रय-
स्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥



## चतुस्त्रिंशत्तमोऽध्यायः ।

---

सनत्कुमार उवाच ।
गणेशेशं प्रवक्ष्यामि दानं पूर्वोक्तमण्डपे ।
सम्पूज्य देवदेवेशं लोकपालसमावृतम् ॥ १ ॥

विश्वेश्वरान् यथायाक्तं सर्वाभरणसंयुताम् ।
दृष्टनिक्षेप वै कृत्वा सम्पूज्य च विधानतः ॥ २ ॥
अष्टदिक्षष्टकुण्डेषु पूर्ववद्धोममाचरेत् ।
पश्चावरणमार्गेण पारम्पर्य्यक्रमेण च ॥ ३ ॥
सप्तविप्रान् समभ्यर्च्य कन्यामेकां तथोत्तरे ।
दापयेत् सर्वमन्त्राणि स्वैः स्वैर्मन्त्रैरनुक्रमात् ॥ ४ ॥
दत्त्वैवं सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ५ ॥

इति आदि महापुराणे श्रीलैङ्गे उत्तरार्द्धे चतुस्त्रिंश-
त्तमोऽध्यायः ॥ ३४ ॥



## पञ्चत्रिंशत्तमोऽध्यायः ।



सनत्कुमार उवाच ।

अथ ते सम्प्रवक्ष्यामि हेमधेनुविधिक्रमम् ।
सर्वपापप्रशमनं सर्वदुर्भिक्षनाशनम् ॥ १ ॥
उपसर्गप्रशमनं सर्वव्याधिनिवारणम् ।
निष्कायाञ्च सहस्रेण सुवर्णेन तु कारयेत् ॥ २ ॥
तदर्द्धेनापि वा सम्यक् तदर्द्धार्द्धेन वा पुनः ।
शतेन वा प्रकर्त्तव्या सर्वरूपगुणान्विता ॥ ३ ॥
गोरूपं सुखुरं दिव्यं सर्वलक्षणसंयुतम् ।

खुराग्रे विन्यसेद्वज्रं शृङ्गे वै पद्मरागकम् ॥ ४ ॥
भ्रुवोर्मध्ये न्यसेद्दिव्यं मौक्तिकं मुनिसत्तमाः।
वैदूर्य्येण स्तनाः कार्य्या लाङ्गूलं नीलतः शुभम् ॥५॥
दन्तस्थाने प्रकर्त्तव्यः पुष्परागः सुशोभनः।
पद्मवत् कारयित्वा तु वत्सं कुर्य्यात् सुशोभनम् ॥ ६ ॥
सुवर्णदशनिष्केण सर्वरत्नसुशोभितम्।
पूर्वोक्तवेदिका मध्ये मण्डलं परिकल्प्य तु ॥ ७ ॥
तन्मध्ये सुरभिं स्थाप्य सवत्सां सर्वतत्त्ववित्।
सवत्सां सुरभिं तत्र वस्त्रयुग्मेन वेष्टयेत् ॥ ८ ॥
सम्पूजयेद्वाङ्गायत्र्या सवत्सां सुरभिं पुनः।
अथैकाग्निविधानेन होमं कुर्य्याद्यथाविधि ॥ ९ ॥
समिदाज्यविधानेन पूर्ववच्छेषमाचरेत्।
शिवपूजा प्रकर्त्तव्या लिङ्गं स्नाप्य घृतादिभिः ॥ १० ॥
गामालभ्य च गायत्र्या शिवाया दापयेच्छुभाम्।
दक्षिणा च प्रकर्त्तव्या त्रिंशन्निष्का महामते ! ॥११॥
इति आदि महापुराणे श्रीलैङ्गे उत्तरार्द्धे पञ्चत्रिंश-
त्तमोऽध्यायः ॥ ३५ ॥



## षट्त्रिंशत्तमोऽध्यायः।

सनत्कुमार उवाच।
लक्ष्मीदानं प्रवक्ष्यामि महदैश्वर्य्यवर्द्धनम्।
पूर्वोक्तमण्डपे कार्य्यं वेदिकोपरि मण्डले ॥ १ ॥

श्रीदेवीमतुलां कृत्वा हिरण्येन यथाविधि ।
सहस्रेण तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ॥ २ ॥
अष्टोत्तरशतेनापि सर्वलक्षणसंयुताम् ।
मण्डले विन्यसेल्लक्ष्मीं सर्वालङ्कारसंयुताम् ॥ ३ ॥
तस्यास्तु दक्षिणे भागे स्थण्डिले विष्णुमर्चयेत् ।
अर्चयित्वा विधानेन श्रीसूक्तेन सुरेश्वरीम् ॥ ४ ॥
अर्चयेद्विष्णु गायत्र्या विष्णुं विश्वगुरुं हरिम् ।
आराध्य विधिना देवीं पूर्ववद्धोममाचरेत् ॥ ५ ॥
समिद्धृत्वा विधानेन आज्याहुतिमथाचरेत् ।
पृथगष्टोत्तरशतं होमयेद् ब्राह्मणोत्तमैः ॥ ६ ॥
आहूय यजमानन्तु तस्याः पूर्वदिशि स्थले ।
तस्मै तां दर्शयेद्देवीं दण्डवत् प्रणमेत् क्षितौ ॥ ७ ॥
प्रणम्य विष्णुं तत्रस्थं शिवं पूर्ववदर्चयेत् ।
तस्या विंशतिभागन्तु दक्षिणा परिकीर्त्तिता ॥ ८ ॥
तदर्द्धांशन्तु दातव्यमितरेषां यथार्हतः ।
ततस्तु होमयेच्छम्भुं भक्तो योगी विशेषतः ॥ ९ ॥

इति आदि महापुराणे श्रीलैङ्गे उत्तरार्द्धे षट्त्रिंश-
त्तमोऽध्यायः ॥ ३६ ॥



## सप्तविंशत्तमोऽध्यायः।



सनत्कुमार उवाच।

अथातः सम्प्रवक्ष्यामि तिलधेनुविधिक्रमम्।
पूर्वोक्तमण्डपे कुर्य्याच्छिवपूजान्तु पश्चिमे॥ १॥
तस्याग्रे मध्यतो भूमौ पद्ममालिख्य शोभनम्।
वस्त्रेराच्छादितं पद्मं तन्मध्ये विन्यसेच्छुभम्॥ २॥
तिलपुष्पन्तु क्वलाथ हैमपद्मं विनिक्षिपेत्।
त्रिंशन्निष्केण कर्त्तव्यं तदर्द्धार्द्धेन वा पुनः॥ ३॥
पञ्चनिष्केण कर्त्तव्यं तदर्द्धार्द्धेन वा पुनः।
तमाराध्य विधानेन गन्धपुष्पादिभिः क्रमात्॥ ४॥
पद्मस्योत्तरदिग्भागे विप्रानेकादशान् न्यसेत्।
तानभ्यर्च्च विधानेन गन्धपुष्पादिभिः क्रमात्॥ ५॥
आच्छादनोत्तरासङ्गं विप्रेभ्यो दापयेत् क्रमात्।
उष्णीषञ्च प्रदातव्यं कुण्डले च विभूषिते॥ ६॥
हेमाङ्गुलीयकं दत्त्वा ब्राह्मणेभ्यो विधानतः।
एकादशानि वस्त्राणि तेषामग्रे प्रकीर्य्य च॥ ७॥
तेषु वस्त्रेषु निक्षिप्य तिलाढ्यानि पृथक् पृथक्।
कांस्यपात्रं शतपलं विभिद्यैकादशांशकम्॥ ८॥
इक्षुदण्डञ्च दातव्यं ब्राह्मणेभ्यो विशेषतः।
गोशृङ्गे तु हिरण्येन द्विनिष्केण तु कारयेत्॥ ९॥

रजतेन तु कर्त्तव्याः खुरा निष्कद्वयेन तु।
एवं पृथक् पृथक् दत्त्वा तत्तिलेषु विनिक्षिपेत् ॥१०॥
रुद्रैकादशमन्त्रैस्तु रुद्रेभ्यो दापयेत्तदा।
पश्चस्य पूर्वदिग्भागे विप्रान् द्वादश पूजितान् ॥ ११ ॥
एतेनैव तु मार्गेण तेषु श्रद्धासमन्वितः।
द्वादशादित्यमन्त्रैश्च दापयेद्देवमेव च ॥ १२ ॥
पूर्ववद्दक्षिणे भागे विप्रान् षोडश संस्थितान्।
मूर्त्तिं विघ्नेशमन्त्रैश्च दापयेत् पूर्ववत् पुनः ॥१३॥
यजमानेन कर्त्तव्यं सर्वमेतद् यथाक्रमम्।
केवलं रुद्रदानं वा आदित्येभ्योऽथवा पुनः ॥ १४ ॥
मूर्त्यादीनाञ्च वा देयं यथाविभवविस्तरम्।
पद्मं विन्यस्य राजासौ शेषं वा कारयेन् नृपः ॥१५॥
दक्षिणा च प्रदातव्या पञ्चनिष्कं च भूषणम् ॥१६॥

इति श्रीलैङ्गे उत्तरार्द्धे तिलधेनुदानं नाम सप्तत्रिंशत्तमोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशत्तमोऽध्यायः।

सनत्कुमार उवाच।

गोसहस्रप्रदानञ्च वदामि शृणु सुव्रत।
गवां सहस्रमादाय सवत्सं सगुणं शुभम् ॥ १ ॥

तास्त्वभ्यर्च्य यथाशास्त्रमष्टौ सम्यक् प्रयत्नतः ।
तासां शृङ्गाणि हेम्नाच प्रतिनिष्केण बन्धयेत् ॥ २ ॥
खुरांश्च रजतेनैव बन्धयेत् कण्ठदेशतः ।
प्रतिनिष्केण कर्त्तव्यं कर्णं वस्त्रञ्च शोभनम् ॥ ३ ॥
शिवाय दद्याद् विप्रेभ्यो दक्षिणाञ्च पृथक् पृथक् ।
दशनिष्कं तदर्द्धं वा तस्यार्द्धमथापि वा ॥ ४ ॥
यथाविभवविस्तारं निष्कमात्रमथापि वा ।
वस्त्रयुग्मञ्च दातव्यं पृथग्विप्रेषु शोभनम् ॥ ५ ॥
गावश्चाराध्य यत्नेन दातव्याः सुमनोरमाः ।
एवं दत्त्वा विधानेन शिवमभ्यर्च्य शङ्करम् ॥ ६ ॥
जपेदग्रे यथान्यायं गवां स्तवमनुत्तमम् ।
गावो ममाग्रतो नित्यं गावो मे पृष्ठतस्तथा ॥ ७ ॥
हृदये मे सदा गावो गवां मध्ये वसाम्यहम् ।
इति कृत्वा द्विजाग्रेभ्यो दत्त्वा गत्वा प्रदक्षिणम् ॥ ८ ॥
तद्रोमवर्षसंख्यानि स्वर्गलोके महीयते ॥ ९ ॥

इति महापुराणे श्रीलैङ्गे उत्तरार्द्धे गोसहस्रप्रदानं
नामाष्टत्रिंशत्तमोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वारिंशत्तमोऽध्यायः ।

सनत्कुमार उवाच ।
हिरण्याश्वप्रदानञ्च वदामि विजयावहम् ।
अश्वमेधात् पुनः श्रेष्ठं वदामि शृणु सुव्रत ! ॥ १ ॥

अष्टोत्तरसहस्रेण अष्टोत्तरशतेन वा ।
कृत्वाश्वं लक्षणैर्युक्तं सर्वालङ्कारसंयुतम् ॥ २ ॥
पञ्चकल्याणसम्पन्नं दिव्याकारन्तु कारयेत् ।
सर्वलक्षणसंयुक्तं सर्वाङ्गैश्च समन्वितम् ॥ ३ ॥
सर्वायुधसमोपेतमिन्द्रवाहनमुत्तमम् ।
तन्मध्यदेशे संस्थाप्य तुरङ्गं स्वगुणान्वितम् ॥ ४ ॥
उच्चैःश्रवसकं मत्वा भक्त्या चैव समर्चयेत् ।
तस्य पूर्वदिशा भागे ब्राह्मणं वेदपारगम् ॥ ५ ॥
सुरेन्द्रबुद्ध्या सम्पूज्य पञ्चनिष्कं प्रदापयेत् ।
तमश्वं शिवभक्ताय दातव्यं विधिनैव तु ॥ ६ ॥
सुवर्णाश्वं प्रदत्त्वा तु आचार्य्यमपि पूजयेत् ।
यथाविभवविस्तारं पञ्चनिष्कमथापि वा ॥ ७ ॥
दीनान्धकृपणानाथ बालवृद्धकृशातुरान् ।
तोषयेदन्नदानेन ब्राह्मणांश्च विशेषतः ॥ ८ ॥
एतद् यः कुरुते भक्त्या दानमश्वस्य मानवः ।
ऐन्द्रान् भोगांश्चिरं भुक्त्वा कपिरैश्वर्य्यवान् भवेत् ॥ ९

इति महापुराणे श्रीलैङ्गे उत्तरार्द्धे हिरण्याश्वदानं
नामैकोनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥



# चत्वारिंशत्तमोऽध्यायः।



सनत्कुमार उवाच।

कन्यादानं प्रवक्ष्यामि सर्वदानोत्तमोत्तमम्।
कन्यां लक्षणसम्पन्नां सर्वदोषविवर्जिताम्॥ १॥
मातापित्रोस्तु संवादं कृत्वा दत्त्वा धनं महत्।
आत्मीकृत्याथ संस्नाप्य वस्त्रं दत्त्वा शुभं नवम्॥ २॥
भूषणैर्भूषयित्वाथ गन्धमाल्यैरथार्चयेत्।
निमित्तानि समीक्ष्याथ गोत्रनक्षत्रकादिकान्॥ ३॥
उभयोश्चित्तमालोक्य उभौ सम्पूज्य यत्नतः।
दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने॥ ४॥
साक्षादधीतवेदाय विधिना ब्रह्मचारिणे।
दासदासीधनाढ्यश्च भूषणानि विशेषतः॥ ५॥
क्षेत्राणि च धनं धान्यं वासांसि च प्रदापयेत्।
यावन्ति देहे रोमाणि कन्यायाः सन्ततौ पुनः॥ ६॥
तावद्वर्षसहस्राणि रुद्रलोके महीयते॥ ७॥

इति महापुराणे श्रीशैवे उत्तरार्द्धे कन्यादानं
नाम चत्वारिंशत्तमोऽध्यायः॥।



## एकचत्वारिंशत्तमोऽध्यायः ।

सनत्कुमार उवाच ।

हिरण्यवृषदानञ्च कथयामि समासतः ।
वृषरूपं हिरण्येन सहस्रेणाथ कारयेत् ॥ १ ॥
तदर्द्धार्द्धेन वा धीमान् तदर्द्धार्द्धेन वा पुनः ।
अष्टोत्तरशतेनापि वृषभं धर्मरूपिणम् ॥ २ ॥
ललाटे कारयेत् पुण्ड्रमर्द्धचन्द्रकलाकृतिम् ।
स्फटिकेन तु कर्त्तव्यं खुरन्तु रजतेन वै ॥ ३ ॥
ग्रीवान्तु पद्मरागेण ककुद् गोमेदकेन च ।
ग्रीवायां घण्टवलयं रत्नचित्रन्तु कारयेत् ॥ ४ ॥
वृषाङ्गं कारयेत्तत्र किङ्किणीवलयावृतम् ।
पूर्वोक्तदेशकाले तु वेदिकोपरि मण्डले ॥ ५ ॥
वृषेन्द्रं स्थापयेत्तत्र पश्चिमास्यमग्रतः ।
ईश्वरं पूजयेद्भक्त्या वृषारूढं वृषध्वजम् ॥ ६ ॥
वृषेन्द्रं पूज्य गायत्र्या नमस्कृत्य समाहितः ।

तीक्ष्णशृङ्गाय विद्महे धर्मपादाय
धीमहि तन्नो वृषः प्रचोदयात् ॥ ७ ॥

मन्त्रेणानेन सम्पूज्य वृषं धर्मविवृद्धये ।
होमयेच्च घृतान्नाद्यैर्यथा विभवविस्तरम् ॥ ८ ॥
वृषभः पूज्य दातव्यो ब्राह्मणेभ्यः शिवाय वा ।

दक्षिणा चैव दातव्या यथा वित्तानुसारतः ॥ ९ ॥
एतद् यः कुरुते भक्त्या वृषदानमनुत्तमम्।
शिवस्यानुचरो भूत्वा तेनैव सह मोदते ॥ १० ॥

इति महापुराणे श्रीलैङ्गे उत्तरार्द्धे सुवर्णवृषदानं
नामैकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥

---

# द्विचत्वारिंशत्तमोऽध्यायः।

सनत्कुमार उवाच।
गजदानं प्रवक्ष्यामि यथावदनुपूर्वशः।
द्विजाय वा शिवायाथ दातव्यः पूज्य पूर्ववत् ॥ १ ॥
गजं सुलक्षणोपेतं हैमं वा राजतन्तु वा।
सहस्रनिष्कमात्रेण तदर्द्धेनापि कारयेत् ॥ २ ॥
तदर्द्धार्द्धेन वा कुर्य्यात् सर्वलक्षणभूषितम्।
पूर्वोक्तदेशकाले च देवाय विनिवेदयेत् ॥ ३ ॥
अष्टम्यां वा प्रदातव्यं शिवाय परमेष्ठिने।
ब्राह्मणाय दरिद्राय श्रोत्रियायाहिताग्नये ॥ ४ ॥
शिवमुद्दिश्य दातव्यं शिवं सम्पूज्य पूर्ववत्।
एतद्यः कुरुते दानं शिवभक्तिसमाहितम् ॥ ५ ॥

